**वटवः** (अपवार्य) अये, बाष्पोत्पीडेन उपरुध्यते वचस्तातस्य ।

**गरुडः** यदा तावदत्रभवन्त एव तत्वोपदेष्टारः तत्को नामायं चित्त-व्याक्षेपः ।

**ऋषयः** कुमार, मा मैवम् । सर्वातिशायी खल्वयं तत्रभवत्पुत्र-स्नेहः ।

हिरण्यगर्भादि पिपीलिकान्तं
प्रसिद्धमेवास्य विजृम्भितं तत् ।
विवेकमुन्मथ्य तपः श्रुतं वा
यन्नानुरुध्यत्यपि बन्धुवर्गान् ॥ १३२

**कश्यपः** (समाधाय) एवमेतत् ।

यदपि सुरसमूहानेष जित्वा हरिष्य-
त्यमृतमिति विधातुश्शासनान्निश्चिनोमि ।
तदपि गुरुरपत्यस्नेहजन्माऽयमाधिः
कृपणमिव दुराशा मां कदर्थीकरोति ॥ १३३

**ऋषयः** (जनान्तिकं) ननु स्मारणीयः समये सुप्रतीकविभाव-[1]सुद्धूत्यादेशस्तातस्य ।

**कश्यपः** आम् । वत्स वैनतेय ।

**गरुडः** आज्ञापयतु तातः ।

---

*1.* सूक्त्यादेश will make better reading.

कश्यप: मानसारण्यवासिनः सिद्धर्षयोऽप्यमी त्वत्तः कञ्चिदुपकार-मिच्छन्ति ।

गरुड: (सविनयम्) ननु अनुजिघृक्षन्तीत्यादि भवति ।

कश्यप: बाढम् ।

गरुड: किमाज्ञापयन्ति गुरवः ।

ऋषय: महान्खलु नस्तत्र तपसः प्रत्यूहस्संवृत्तः ।

गरुड: अस्त्येतत् ।

तपोव्ययमकुर्वाणैः यशश्चान्यस्य दित्सुभिः ।
अन्तराया विवर्धन्ते तपस्विभिरुपेक्षिताः ।। १३४

कः पुनरसौ ।

ऋषय: कूर्मोऽन्तस्सलिलं करी तटभुवि स्थामप्रमाणोत्कटौ
अन्योन्यस्य वधैषिणावतितरां दुस्साध्यदर्पामयौ ।
तौ शप्ताविव पूर्वजन्मनि मिथो वैरं स्मरन्ताविव
क्रोधेद्धौ सततं सरःपरिसरे सङ्ग्रामयेते भृशम् ।।

तौ च न केवलं ऋषीनेव, यावत्तिरश्चोऽप्यभिद्रावयतः[1] ।

गरुड: [सोत्साहम्] हन्त, सम्पन्नमेव तर्हि पाथेयम् । तदलं कालातिपातेन ।

कश्यप: [प्रणिधाय]

---

1. Ms. reads "द्रावति"

रहस्यं यदृचां साम्नां यजुषां वाप्यथर्वणाम् ।
तेन स्वस्त्ययनेन त्वामूर्जितायानुमन्त्रये ॥ १३६

[अपि च]

यन्ता यस्य स्वयं तादृशरथरचने विश्वकर्मा प्रतोद-
व्याक्तात्मा सम्प्रदायो हयहृदयविदां प्रग्रहे सावधानः ।
प्रान्ते कालाग्निरौद्रः शररचितगुणः पत्त्ररंहासुपर्वा-
गीर्वाणग्रावधन्वा[1] त्रिपुरजयपटुः पृष्ठगुप्त्यै स तेऽस्तु[2] ॥

ऋषयः कुमार, निस्संशयं, करस्थ एव ते विजयः ।

सुरासुराणां गुरुणा यदेषा
प्रयोजिताऽऽशीः प्रणिधानपूर्वम् ।
संश्रावितं वैजयिकं च शम्भोः
पुरामुपाख्यानमिदं जयस्य ॥ १३८

गरुडः एवमेतत् । किन्तु.

यत्किञ्चित्परमं पवित्रमृषयः तीर्थानि वा देवताः
सोऽयं सर्वमयोर्हरिर्न च परः पत्युर्यथाऽसौ स्त्रियाः ।
पित्रोरभ्यधिकः सुतस्य न तथेत्येतावती मे मतिः
पुत्रस्नेहविचेष्टितानि तु विदाङ्कुर्वन्तु युष्मादृशाः ॥

ऋषयः ननु एतावदेव पर्याप्तं सर्वकामेभ्यः । तद्वयमपि अत्रभवते [3]शन्तातिमाशास्महे ।

---

1. गीर्वाणग्रावन् – The mountain of Devas.
2. Ms. reads "गोपत्येतेऽस्तु"
3. शन्ताति—शिवसमीरणेति तातिप्रत्ययः ।
शन्तातिं — शिवतातिम्, अभ्युदयम् ।

सर्वां दृष्टामथर्वागमशिरसि दधन्मूर्तिकृत्यामखर्वा-
दृगर्वात्प्रभ्रष्टमर्वाग्बलिमकृत पदान्कान्तमर्चाद्यपेतम् ।
स्वर्वार्यङ्गुष्ठपर्वाहृतगगनतलाद्योतयद्गां सुपर्वा
शर्वाद्यैर्यः पुनर्वामन इति विनुतः सोऽस्तु सर्वार्थदस्ते ॥

**वटव:** कथं प्रस्थित एव तत्रभवान् (सस्नेहमालिङ्ग्य)

हैमाम्बुजन्ममृदुनालमृणालकानि
स्वादून्युदुम्बरहिरण्मयजाम्बवानि ।
स्वच्छानि मानसपयांसि सुशीतवाताः
सन्तर्पणानि पथि सन्तु तवेन्द्रियाणाम् ॥ १४१

अपरा चेयं तातोदीरितैवाशीः[2] ।

आगङ्गासिन्धुसङ्गादपि धवलमगङ्गामलङ्गाहमाना
सङ्गादुन्मुक्तसङ्गात्सपदि विरचयन्त्यापतङ्गात्प्रसङ्गात् ।
शृङ्गान्मेरोरनङ्गान्तकशिरसि पतन्त्यात्तशृङ्गाररम्य-
गङ्गारिङ्गत्तरङ्गावलिरवतु सदाभीष्टभङ्गाभिषङ्गात् ॥

**गरुड:** (सप्रणामं प्रतिगृह्य) निपुणं परिचर्यतां तातो वयस्यैः ।

**वटव:** कुमारोऽपि कृतकार्यस्त्वरितमभ्येतु ।

**गरुड:** बिभ्रद्दृप्तौ युगपदवशौ कूर्मनागौ कराभ्यां
ब्रह्मर्षीणां प्रियमपि चरन्नाकमभ्युत्पतामि ।

---

1. Ms. reads 'बा'; it must be 'रा' ।

**कश्यपः** नैयग्रोधीमुरुतरशिफां लम्बतीर्थेऽत्रलम्ब्या-
वाचः पूज्यान्प्रणमतु भवान् रश्मिपान्वालखिल्यान् ।। १४३

**गरुडः** (सादरम्) यदादिशति तातः । ओं नमोऽरिष्टनेमये ताक्ष्याय । (पितुश्चरणौ संस्पृशन् उदगुत्पतनमभिनीय निष्क्रामन्नेव, प्रविश्य जवनिकान्तरम्, पुनरवलोक्य)

शिष्याभ्यां तपनत्विषामिव जवे दीक्षागुरुभ्यामिव
स्वान्तस्य प्रलयप्रचण्डमरुतः सन्नह्यकाभ्यामिव ।
पक्षाभ्यामुपसंहरन्निव समाकर्षन्किमु द्राघिम-
ध्वंसार्तिक ग्रसयन् पिबन्निव दिशः प्राप्तस्सरो मानसम् ।।

रमणीयतरं खल्वदः सकलतीर्थजलाशयानामुपमानम् ।

पूर्ण-निर्मलमेरुमन्दरदरीनिर्यन्महानिर्झरैः
नानारत्नशिलाचयैः परिसरे हैमे निबद्धं सरः ।
सर्वर्तुप्रसवैर्लताविटपिभिः पद्मैर्वृतं काञ्चनैः
सामोदैरधियोजनं मदयति द्राङ्मानसं मानसम् ।। १४५

अपि च –

अत्र स्थिताः पत्नरथा विवेकं
क्षीरस्य नीरस्य च राजहंसाः ।
कुर्वन्तु वेद्ये परमास्तु हंसाः
को वेद तेषां परमं विवेकम् ।। १४६

(परतोऽवलोक्य)

रोपावेशातितीव्रास्पदरुचिरचलत्पादमुद्भ्रान्तपुच्छं
धुन्वन्मूर्धानमाकूणितनयनमिलास्फालितप्रान्तशुण्डम् ।
उत्सेधस्थामदृप्तश्चलइव शिखरी बृंहितापूरिताशं
यूथैरन्वीयमानः परिपतति सरः प्रान्तमीषाविषाणः[1] ॥

नूनमनेनैव महर्षिभिरावेदितेन तपःप्रत्यूहेन भवितव्यम् ।

कूर्मोऽपि प्रतिनिनदोपबृंहितं यत्
तच्छ्रुत्वैव द्विरदबृंहितं सकोपः ।
सङ्क्षोभ्य प्रबलमपः प्रमाणादयात्[2]
उद्ग्रीवः स्वजनवृतो विनिर्जिहीते ॥ १४८

रमणीयमिदमनयोरायोधनम् ।

जलेऽधिकबलः कूर्मः कुञ्जरः क्षोणिमण्डले ।
सन्धियुद्धमिदं तुल्यं समस्थामप्रमाणयोः ॥ १४९

तथा हि –

कूर्मोऽयं दशयोजनानि विततः त्रीण्युच्छ्रितः कुञ्जरः
हस्ताभ्यां चरणौ विगृह्य बलवत्तोयान्तरात्कर्षति ।
वन्यस्त्वेष दशोच्छ्रितः करिवरः पञ्चायतश्चासकृत्
कूर्मं कर्षति शुण्डयाऽस्य कलयन्ग्रीवां बहिर्नीरतः ॥ १५०

किमनेन समीहितपरिपन्थिना कौतुकावलोकनरसेन ।

---

1. ईषाविषाणः having projecting the tusks
2. 'प्रमाणदर्पात्' makes better reading.

मत्तैरावणदर्पदारणसृणिप्राणप्रमाणैर्नखैः
प्रोते पृष्ठकरोरुके पटुतरोत्पातेन भृत्वानयोः ।
उच्चैरुत्पतनाद्विनिस्सरदसू सानौ तु मेरोःसुर-
क्षोणीभृच्छिखरे तपोवनजुषां दस्यू समालम्बये ।। १५१

(अतर्कितोपनिपातं उभौ गृहीत्वोत्पतनमभिनीय योजनम्)

विचेष्टमानाववशौ गृहीत्वा
श्येनश्शकुन्ताविव कुम्भिकूर्मौ ।
प्राप्तोऽस्मि रत्नैर्विविधैर्विचित्रं
क्षणेन जाम्बूनदशैलश्शृङ्गम् ।। १५२

(पुरोऽवलोक्य)

मन्दाकिन्यास्तटमनुवनं कल्पसन्तानकाना-
मेतत्प्रीतं(तिं) वितरति दृशोर्देवताक्रीडभूमिः ।
कामक्रीडास्वपि विहरणे किन्नरीणां सुरीणां
सर्वान्कामानिहह सुवते शाखिनश्छिन्नतनेन ।। १५३

निरूपयामि तावदनयोः आसञ्जनानुरूपं तरुवरम् ।
(परतोऽवलोक्य)

नध्री वर्मशतस्य या यदि तया नह्येत शाखाऽसकृत्
तादृश्यश्च परश्शताः प्रविततास्ता योजनानां शतम् ।
येषां वाहिनि कुम्भिनः फलरसे मज्जन्ति तेषां मह-
ज्जम्बूरोहिणशाखिनां वनमदस्तुङ्गं समालोक्यते ।। १५४

(अधोऽवलोक्य)

सहस्रयोजनोच्छ्रायो वनस्पतिक्षमः सम्भाव्यते ।

न्यग्रोधस्यास्य शाखायां मूर्धन्यस्य महीरुहाम् ।

कुम्भिकूर्मौ समासज्य साधयामि समीहितम्' ॥ १५५

(शाखाक्रममभिनयन्, श्रवणावधाननाटितकेन) कथं कडकडायते नाम । (निरूप्य ससंभ्रमम्) ननु महानपरः प्रमादस्संवृत्तः ।

(सावेगम्)

अहह ! वृक्षाद्विश्लिष्टा मा स्म तपोवृद्धास्तत्रभवन्तः क्रोधदीप्तेन चक्षुषा सानुबन्धं मां निर्दहेयुः ।

तातादिष्टास्तेऽप्यवाचो यदस्या-

मालम्बन्ते वालखिल्याशिशफायाम् ।

(सलाघवोत्पातम्)

यावद्भूमिं याति तावन्मुखेन

क्षिप्रं शाखां धारयन्नुत्पतामि ॥ १५६

(तथा कृत्वा) किं नामात्र क्षमं स्यात् यन्नसमीहितमन्तरियात् । भवत्वेवं तावत् ।

बिभ्रद्वक्त्रेण शाखां तृणमिव परितः प्रोत्पतन् पक्षवर्गैः

सप्तद्वीपामनन्तां कुलधरणिधराश्चालयन्नम्बुराशीन् ।

हस्ताग्रासक्तकूर्मद्विरदनरुधिरोद्गारधाराभिरुच्चै-

रिन्द्रोपेन्द्रादिसद्मस्वपि वियति महोत्पातशङ्कां तनोमि ॥

(उद्भ्रान्तकमभिनीय)

न स्यां प्राणिभयङ्करः सुमहतीं शाखां विमुञ्चन्कथं
देशः कश्च शरीरिभिर्विरहितः स्याद्यत्र मुच्येत वा ।
एवं व्यापृत एव पक्षचरणैः कुर्यां महत्साहसं
वीराणां तुमुले तु मा स्म कुहनात्रह्मोपघातो भवत् ।। १५८

निरूपयामि तावदनयोर्निर्जीवप्राययोः कुम्भिकच्छपयोः शाखायाश्च प्रक्षेपानुरूपं निर्जनप्रदेशम् ।

लङ्कोपान्ते निषधशिखरिप्रान्तरे सह्यपृष्ठे
विन्ध्यद्रोणीष्वपि जलनिधेरन्तरीपान्तरेषु ।
मोक्तुं शाखां हिमवति गिरौ स्यादपि स्थानमीदृक्
सानुक्रोशाः कथमिव मयि स्युः पुनर्वालखिल्याः ।। १५९

नूनममुमेव[1] भाविनमर्थं पश्यता तातेन तथादिष्टोऽस्मि (मनसा वालखिल्यान्नमस्कृत्य) तत्किं इमानेव पूज्यान् न वाग्भिः प्रसादयामि । (शाखाया अधोऽवलोक्य)

कथमद्यापि ध्याननिमोलिताक्षा एव तत्रभवन्तः । दिष्ट्या लाघवातिरेकेण शाखामचलयन् अत्रभवतामनपराद्धोऽस्मि । भवत्वेवं तावत् ।

जानताप्यार्यतिं येन नोपदिष्टा प्रतिक्रिया ।
तमेव तातमन्विष्य पृच्छामि ब्रह्मसङ्कटम् ।। १३०

यतः

1. Transcript reads "विभावित" वि is not in Ms.

आपृच्छन्ति मनीषया परिणतान्वर्षीयसः संशये
ये धीराश्चिरकारिणः खलु न ते सीदन्ति कृच्छ्रेष्वपि ।
यत्रानागतसंविधानविहतास्तत्रापि पश्यन्त्यमी
प्रत्युत्पन्नधियाभ्युपायमपरं यो यद्भविष्यानति(?) ॥ १६१

अपि च

यत्पश्चादपि तद्यथाहि मुकुरे यस्यां पुरोभासते
या सूक्ष्मानुपतन्न काविव परिच्छित्तिं नयत्युच्चकैः ।
स्वाभाव्येन करस्थितामलकवद् ध्यानागतं पश्यति
प्राज्ञानां धिषणा हि दुर्गमतरास्वापत्सु सन्तारिणी ॥ १६२

(ऊर्ध्वमवलोक्य) भूयसाधुना नभोमध्यमलङ्कुर्वाणे भगवति भानुमालिनि, मन्दाकिन्यां आह्निकं निर्वर्तयता तातकश्यपेन भवितव्यम् । (अधोऽवलोक्य) अये, कथमत्रैव तातकश्यपः ।

आप्लुत्य द्युनदीजले विरचयन्माध्यन्दिनं कर्म यः
प्राक्कूलेषु कुशेषु दर्भरुचिरब्रह्माञ्जलिः प्राङ्मुखः ।
एकोऽधीत्य ऋचो यजूंषि विधिवत्सामान्यथर्वा गिरः
कल्पब्राह्मणगाथिकाः परिदधात्यब्जोद्भवस्यात्मजः ॥ १६३

(उच्चैः) भो भोस्तातकश्यप, प्रतिविधत्तां तावदत्रभवान् अदो ब्रह्मसङ्कटम् ।

(नेपथ्ये)

एतद्विश्वहितायति व्यवसितं तार्क्ष्यस्य धर्मोत्तरं
सङ्कल्पः स च तादृगत्रभवतां साफल्यमस्तु द्वयोः ।

चेत्कल्यत्वपरीक्षणं तदपि वा स्थालीपुलाकक्रमात्
जातं कश्चिदतिक्रमो यदि शिशोः क्षन्तुं तमप्यर्हथ ।। १६४

गरुडः (अधश्शाखं निरूप्य) कथममी मरीचिपाः समुन्मील्य नयनानि,

आकर्ण्य तातवचनं परिहृत्य शाखां
आलोक्य मां च मनसा बहुमन्यमानाः ।
अङ्गुष्ठपर्ववपुषस्तपसाऽतिवृद्धाः
स्वर्निम्नगामनुगताः प्रणमन्ति तातम् ।। १६५

(पुनर्नेपथ्ये)

आम्नायशीलनतपःपरिपाकयोग-
सिद्धाञ्जनेन[1] विरजस्तमसान्तरेण ।
यच्चिन्मयेन नयनेन परं निरीक्ष्यं
तद्वः सदौपनिषदं हृदि सन्निधत्ताम् ।। १६६

गरुडः (आकर्ण्य, अवलोक्य च) कथमनुरूपया आशिषा तातेनानुगृहीतास्तत्रभवन्तः तपसे संसाधयन्तो माममप्यशिषाऽनुगृह्णन्ति ।

(पुनस्तत्रैव नेपथ्ये[2])

वन्यामाश्रित्य वन्यां कथमपि वपुषो वृत्तिमन्यां चरन्तः
कर्मन्यासादनन्याः कतिचन कृतिनो यं विचिन्वन्त्यवन्याम् ।

---

1. "सिद्धाञ्जनेन" makes better reading than "सिद्धांजमेन" in Ms.
2. "नेपथ्ये" omitted in Ms.

कन्यामव्यंस्सुकन्यां च्यवन इव विभुर्यो निनाय स्वजन्यां
अन्यायन्ते सहन्यादवतु हरिरिहामुत्रशैलीं च धन्याम् ॥

गरुडः (सभक्तिरोमाञ्चम्) अपि नामाहमपि तमादिनारायणं देव-
मासादयिष्यामि । अथवा आदिष्ट एवास्मि भगवता
शेषेण । (आलौल्येनेत्यादि पुनः पठति)

(नेपथ्ये)

शाखां सुवेलकटके हिमसंहतौ वा
त्यक्त्वा पयोधिमधि कूर्मगजौ परासू ।
कालः पुरा समतिवर्तत एष बुध्वा
संसाधय त्वरितमात्महितं गरुत्मन् ॥ १६८

गरुडः (सप्रणामं प्रतिगृह्य)

अर्वागुत्पत्य[1] वेगेन कृत्वा तातस्य शासनम् ।
उदगुत्पत्य पश्यामि गुहास्वमृतमाहितम् ॥ १६९

(तथाभिनीय) अयमहमिदानीम् —

शाखां दुरीहामिव कुम्भिकूर्मा-
वतिप्रवृद्धाविव कामलोभौ ।
विसृज्य, युञ्जान इवामृतार्थी
पश्यामि विष्णोः परमं पदं तत् ॥ १७०

(प्रविश्य विमानेन दिव्यपुरुषौ)

---

1. Ms. reads 'अपागुत्पत्य'

**दिव्यपुरुषौ**– स्वस्ति विजयतां कुमारः । याविमौ हीनयोने-[1]विमोचितौ गजकच्छपौ महावीरेण ।

अन्योन्यशापमधिगम्य विभागदोषा-
द्योन्यतरेऽपि सविशेषरुषौ सगर्वौ ।
प्राप्तौ श्रियं परमिकां भवतः प्रसादा-
दावां विभावय विभावसुसुप्रतीकौ ।। १७१

**गरुडः** (सप्रणामं) प्रियंमे । भुज्यतां ऋषिसोदराभ्यां तीव्रस्य तपसः फलम् ।

**दिव्यपुरुषौ**- तत्रभवतेऽरिष्टनेमयेऽरिष्टतातिमाशास्वहे ।

**एकः** अग्नाविष्णू तव बलम[2]लं सङ्गरे वर्धयेतां
ब्रह्मक्षत्रे त्वदनुभवतां पक्षसंरक्षणाय ।
सोमौपम्यं वपुषि परमं धाम विस्फूर्जतां ते
कर्मश्लाघ्यो जगति विनतामात तात त्वमेधि ।। १७२

अपि च–

भ्रातःषण्मुख, किं गजानन रुषा यात्यत्र पूर्णा क्वचित्
हल्लावः सह को जरद्वृषधनात्स्यात्प्रातराशः पितुः ।
साकूतैः शिशुभाषितैरिति सखीनर्मोचितैः सस्मिता-
वन्योन्यं प्रमथैः स्तुतौ शशिभृतौ पातां शिवाशङ्करौ ।।

**गरुडः** सप्रणामं प्रतिगृह्य कारितमदः सुमहन्मङ्गलं अत्रभवद्भ्याम् ।

---

1. वि – is omitted in Ms.
2. अलं – greatly, excessively, to a high degree.

दिव्यपुरुषौ- तद्यावत्तातकश्यपमभिवाद्य कुमारप्रसादेन स्वं पदं आसादयावः ।

(इति निष्क्रान्तौ)

गरुडः आधारं विरचय्यं कच्छपहरिं मन्थानकं मन्दरं
[1]नेत्रं वासुकिमम्बुधेः प्रमथिताद्देवासुरैरुच्छ्रितम् ।
रत्नानां प्रवरं सुमेरुशिखरप्रान्ते निगूढं सुरैः
प्राप्तोऽहं निकषाऽमृतं लघुरयात्संपश्यतां रक्षिणाम् ।।

(पुरोऽवलोक्य)

एतद्बलं गोपुरगौल्मिकानां
युद्धाय सन्नद्धमुपैति मां च ।
भृतं च गन्धर्वपुरोपमानैः
विभ्राजमानैर्गगनं विमानैः ।। १७५

तदत्र प्रविश्य समीहितं साधयामि ।

[ततः प्रविशति विमानेन वसुभूतिर्नारदश्च]

नारदः सखे, गन्धर्वराज, पश्य, पश्य,

उत्पातान् विविधान्विलोक्य धिषणाद्विज्ञाय तत्त्वं मया
प्रागेव प्रतिबोधितः सुरपतिर्युद्धाय सन्नह्यति ।
एतच्चामृतरक्षिणां बलमलं सन्नद्धमूर्ध्वायुधं
ढक्काप्रौढरवेण भौमन[1]परिव्यूढं पुरो ढौकते ।। १७६

---

1. नेत्र' The string of a churning stick.

**वसुभूतिः** देवर्षे, पश्य आपूर्यमाणं स्वकौतुकम् ।

अयमपि पृषदाज्यप्राज्यधारावसिक्तः
ज्वलन इव[2]धवित्रोद्धूतनिर्धूमरोचिः ।
पटुपटहनिनादप्रेद्धधामा गरुत्मान्
परिपतति सरोषं भौमनव्यूहमूर्ध्नि ॥ १७७

**नारदः** सखे, गन्धर्वराज, इतोऽपि

विधिवत्कल्पितैर्नागैर्हयैरथ रथोत्तमैः ।
निर्यियासोर्महेन्द्रस्य पश्य, गोपुरसङ्कुलम् ॥ १७८

तथाहि –

हेषानिर्घोषिताशावलयमुरुचलद्वालधिस्फीतफेनं
मन्थामानम्य तुण्डं हृदिकृतकविकार्कपि शश्वन्नयन्ति ।
उत्तप्तभ्राष्ट्रदन्ता इव मृदुलतिलाः क्वापि न स्थैर्यभाजः
पर्यायेणाग्रपादैः विलिखितविजयतो धौरितोत्कास्तुरङ्गाः ॥

अपि च –

विचित्ररुचिकाञ्चनं कवचमञ्चितं चक्षुषां
शतैः खचितमुच्चकैरिव महेन्द्रनीलोत्पलैः ।
दधद्दशशतैर्हयैः स्वनयनैरिवायोजितं
शताङ्गमुपकल्पितं हरिहयस्समारोहति ॥ १८०

---

1. भौमन Name of Viswakarman, Architect of the gods.
2. धवित्र A fan made of the deers skin.

वसुभूतिः देवर्षे, पश्य इतोऽपि भौमनादेशतः कृतप्रथमसंप्रहरणे गौल्मिकबले वैनतेयोऽपि

कल्पान्तकालकुपितान्तकभीमकर्मा
निर्मथ्य वर्मपरिरक्षितसर्वमर्मा ।
पक्षाग्रतुण्डनखरप्रचुरप्रहारैः
नासीर एष समुहत्कदनं करोति ।। १८१

नारदः कथमितोऽप्येष महानेव कलकलः समुल्लसति । किं नु नामैतत् ? (निरूप्य) आः ज्ञातम् ।

दत्वा निर्याणभेरींकनकमयरणत्किङ्किणीं केतुभाजा
दिव्येन स्यन्दनेन त्वरितमनुसरन्भौमनस्यैव पार्ष्णि ।
वलाद्वाहैर्विचित्रध्वजकवचरथैरात्तनानाविधास्त्रैः
साध्यैरादित्यरुद्रैस्सह वसुभिरसौवृत्रहानिर्जिहीते ।। १८२

अमी च

भूयः फूत्कृतयः समन्यव इव स्पर्धावति स्पर्शने
फेनस्फीतमुखच्छलेन मनसः कृत्पोपहात्या इव ।
सत्पक्षा इव पातुमिच्छव इव व्योमाशयं मातलेः
सञ्जानन्त इवोद्वहन्ति हरयः यानं विमानोपमम् ।। १८३

वसुभूतिः (विलोक्य) रमणीयतमा खलु इयममीषां धोरित्तघाटी ।

तथा हि –

अगणितगिरिनिम्नगान्तराया:
गुरुलघुमार्गविचारणाविहीनाः ।

विरहिजनमनोरथा इवैते
पथि विपथे विचरन्त्ययं तुरङ्गाः ॥ १८४

**नारदः** (श्रुतित्राधिर्यमभिनीय) स्थाने ह्यद्यगगनस्याधेयानुरूपो महिमा । यदमूस्त्रिभुवनोदरव्यापिन्यः ।

आशापर्यन्त भूभृत्कुहरपरिणमत्पिण्डितप्रौढिमोद्य-
द्रथ्यानिर्घोषहेषादिगिभमदमहद्बृह्मितावृम्हणेन ।
संवर्तोद्वज्रगर्जद्घनघनपटलोद्दामनिर्घोषघोराः
शब्दाद्वैतं वितन्वन्त्युरुजगति नदद्दुन्दुभिध्वानधाराः ॥

**वसुभूतिः** देवर्षे, पश्य, महदितो रोमहर्षणं वर्तते ।

अयमपि शतमन्योः पश्यतः पक्षवेगैः
विशकलितविहस्तव्यूहनिर्धूतयोधः ।
अविदितपरिपातं भौमनं मूर्ध्नि गृह्णन्
पृथगवयवखण्डान्यस्य शस्त्रीकरोति ॥ १८६

**नारदः** किमत्रोच्यते । सर्वतोऽभ्यधिकमहिमा खल्वसौ वैनतेयः । (स्मृतिमभिनीय, सरोमाञ्चम्)

व्याप्तब्रह्माण्डपिण्डीभवदधिकतरः संहते सम्पुटे प्राग्
द्यावाभूमी कपाले तडतडितिभनागुच्छसत्सन्धिबन्धे ।
दिङ्नागप्रन्नकर्णज्वरमुरगपुरध्वस्तदृक्कर्म चक्रे
यस्याण्डास्फोटशब्दः क इव तु महिमा वज्रतुण्डस्य तस्य ॥

**वसुभूतिः** इतोऽपि भौमनवधामर्षितेन प्राचीनबर्हिषा भ्रूभङ्गसंज्ञां ग्राहिताः पार्ष्णयः सर्वतो दर्वीकरद्रुहं अभिद्रवन्ति ।

यानास्त्रवर्महीनस्य तद्विशिष्टैर्वयोऽधिकैः ।
शिशोरेकस्य बहुभिः जन्यं चिन्नीयतेतराम् ॥ १८८

तथा हि — अयं सुरवरूथिनी

गृह्णीतोद्धत, विध्यत, प्रहरतावध्नीत, निष्क्रन्तते-
त्यक्षीणामृतरक्षिणां गिरमिमामाकर्ण्य तीक्ष्णाक्षराम् ।
तुण्डाग्रक्रकचोग्रचण्डनखरैरालोडयत्यन्धयन्
पक्षोद्भूतरजोभरैः सुरबलस्याक्षीणि पक्षीश्वरः ॥ १८९

नारदः (साश्चर्यम्)

गरुदुद्धूतरजसा जगत्यन्धीकृतेऽधुना ।
का कथा वस्तुनोऽन्यस्य न स्फुरन्ति विरोचनाः ॥ १९०

वसुभूतिः देवर्षे, महदिव सङ्कटमुत्पश्यामि ।

शक्राज्ञयाऽथ पवनेन रजस्यपास्ते
सम्भूय निर्घृणममी विबुधाः समस्ताः ।
नानाविधैः प्रहरणैर्युगपत्खगेन्द्रं
वर्षन्ति भूधरमिवोन्नतवारिवाहाः ॥ १९१

नारदः (निरूप्य) सखे गन्धर्वराज, न खलु किञ्चिदत्याहितमिव तार्क्ष्यस्य । तथा हि –

अयमपि भुवनानां कम्पनात् रौद्रनादात्
वियदुपरि विमुञ्चन्वञ्चयन्नस्त्रवृष्टिम् ।
दिशिदिशि सुरसङ्घान्विक्षिपत्यक्षमावा-
निव भुजगविपक्षः पक्षवक्षःप्रहारैः ॥ १९२

अपि च –

तुण्डाग्राग्रनखक्षताः क्षनभवं विष्वक् क्षरन्तः क्षणात्
गन्धर्वैस्सह विद्रवन्ति ककुभं साध्याः श्रितां वज्रिणा ।
रुद्रैर्दक्षिणतः सहैव वसुभिः संप्रद्रुतं पश्चिमा-
मादित्याश्चपलं श्रयन्ति सभयं दस्रावुदग्धावतः ॥ १९३

**वसुभूतिः** देवर्षे, पश्य पश्य । परागत एव तत्र भवान् वीरपुरुष-प्रकाण्डः ।

अश्वक्रेदप्रभृतय इह द्वादशासन् पुरो ये
पार्ष्णिग्राहाः सततममृतारक्षिणो भौमनस्य ।
मार्गं तेषामयमुपदिशन्पृष्ठजुष्टं गरुत्मान्
प्राज्ञः पश्यन्नमृतमभितो दीप्यमानं महाग्निम् ॥ १९४

**नारदः** (सकरुणम्) हन्त, कृच्छ्रमनुप्रपन्नः वैनतेयः । कमिव नामात्रोपायं प्रतिपद्यताम् ?

युगान्तमनुदीरितप्रबलवीतिहोत्रात्मना
महापरिधिनाऽमुना परिवृतेऽमृते कांथिता ।
क्षुरप्रनिशितेऽनिशं भ्रमति चक्रयन्त्रे पुन-
र्मनोऽपि न हि सञ्चरत्यथ शरीरिणः का कथा ॥ १९५

**वसुभूतिः** ( विलोक्य, सविषादं ) "कथमपसरतीव प्रेक्षमाणः कृशानुम्?"

**नारदः** ( सविमर्शं ) तत्किमनुपायदर्शितया विक्रमात् विरज्येत वैनतेयः ।

वसुभूतिः (सनिर्वेदं) "कमपि मनसि कुर्वन्निश्चयं यात एव ।।"

नारदः (सोद्वेगम्) कथमसमीक्ष्यकारिणा शिशुतया उपेक्षितैव शोकाम्बुधौ मज्जमाना तत्रभवती दाक्षायणी ।

वसुभूतिः (साश्चर्यं निरूप्य) शान्तं शान्तम् ।
"नवनवतिसुवक्त्रैः पीतनद्येत्य तूर्णम् ।"

नारदः (सविस्मयोत्साहम्)
"प्रशमयति समिद्धं हव्यवाहं समन्तात् ।।"

वसुभूतिः अचिन्त्याश्चर्यसिद्धिमहिमा खलु तत्रभवान् सौपर्णेयः ।
साधु, महावीर, साधु ।

पश्यत्वद्य तवोद्यमं दशशतैर्नेत्रैस्सबाष्पैर्वृषा
रोषेण द्विगुणैः शृणोतु वसुदादेवः सहस्राननः ।
नप्तारं प्रपितामहस्सकुतकं त्वामष्टभिर्लोचनैः
दृग्भ्यां सोदरसद्गुणातिगुरुणा प्रेम्णाऽरुणः प्रेक्षताम् ।।

नारदः प्रतिविहितं तावदमुना प्राचीनायमाने महति चित्रभानौ ।

यत्नं महान्तममुमास्थित एष बुद्ध्या
शौर्येण चोग्रतपसाऽधिगताष्टसिद्धिः ।
यन्त्रं तरिष्यति तु हन्त[वरं] कथं वा
मुच्येत दृग्विषमहोल्बणपन्नगाभ्याम् ।। १९७

वसुभूतिः (ससम्भ्रमं) देवर्षे, पश्य पश्य, अस्य हिरण्मयस्य वैनतेयस्याद्भुतं कर्म ।

भूत्वा सूक्ष्मः प्रणिहितदृगुद्भ्रान्तचक्रारसंधि
निर्णीयान्तर्लघुतरमथाविश्य, वेगातिरेकात् ।
विद्युज्जिह्वावनिमिषनिजप्रेक्षणौ सोमरक्षौ
पांसुक्षेपप्रमुषितदृशौ द्रागहो[हो] निर्मिमीते ॥ १९८

**नारदः** (निरूप्य, सचमत्कारं तलेन तलमास्फाल्य) सखे, गन्धर्व-राज, दृश्यतां सिद्धार्थः कुमारवीरः ।

व्युत्क्रम्य प्रतिहतदृग्विषौ भुजङ्गा-
वुत्पाद्य प्रसभमथामृतस्य कुण्डम् ।
[1]नागाद्धिप्रमथितकूटचक्रयन्त्रः
संहृष्टस्त्वरितमथोत्पतत्यपाची[2] ॥ १९९

तत्क्रियतामस्य शिरस्यम्लानसुमनोवृष्टिः ।

**वसुभूतिः** (पुष्पवृष्टिमभिनीय) इयमिदानीं वैनतेयस्य,

अमृतहरणपरिकुपितसुरवर-
विनिहतनिशितपृथुतरविशिखा ।
अमरतरुसुरभितरविकसित-
कुसुमनिकरविरचितरुचिरवतु शिखा ॥ २००

**नारदः** अहो, वैतृष्ण्यं कुमारवैनतेयस्य । अथवा शेषशिष्यः खल्वसौ तत्रभवान् ।

यस्यार्थे प्रधनं पुरा तदभवद्दैवासुरं दारुणं
शार्ङ्गी ह्रीकृदथ श्रियः समजनि द्राङ्मोहिनीरूपधृक् ।

---

1. नाखाग्र or नागर्य showdness, cleverness.
2. The south or west.

राहोरुन्मथितं शिरः परिभवत्यद्यापि नेत्रे हरेः
तज्जित्वाप्यमृतं जरामृतिहरं दृष्ट्वाप्यसौ नेक्षते ॥ २०१

**वसुभूतिः** बाढम् ।

व्रतयमजपहोमध्यानदानाद्यनेकं
विदधति विधिवद्ये कर्म तैरप्यशक्याः ।
उपनतविषयाणां त्यागतीव्रातपस्य
प्रभवतु कतमस्याभीप्सितस्यास्य सिद्धयै ॥ २०२

**नारदः** यदा तावदमृतलाभ एव सर्वेषामपि तपसां फलम् तत्राप्यनाशंसोरमुष्य नान्यत्पश्यामि ।

प्राणानपेक्षगुरुतोषणविक्रमेण
धर्म्याज्जयाज्जनिभृतामनृशंसभावात् ।
मन्ये त्वलौल्यतपसा महताऽमुना द्राक्
द्रक्ष्यत्यसंशयमयं परमं पुमांसम् ॥ २०३

**वसुभूतिः** (पुरोऽवलोक्य) कथमभूतपूर्वसमरावलोकनकौतुकेन भगवान्भूतभावनोऽपि यदृच्छया विमानमारुह्य निर्गतः ।

**नारदः** (ससम्भ्रममवलोक्य) सखे गन्धर्वराज, अवतारवस्तावद्विमानात् । नन्वदो नेदीय एव —

वत्सोद्भासितकौस्तुभप्रकटितश्रीवत्सलक्ष्मश्रिया
जुष्टं, चन्द्रदिवाकराक्षि निगमप्रोद्गारिनाभ्यम्बुजम् ।
विद्युत्पुञ्जघनेन्द्रनीलनिचयप्रख्यामभिख्यां दध-
त्पीयूषद्रवमुक्तहस्तवदनस्फीतातपत्रं महः ॥ २०४

अपि च,

आपादलम्बिवनमालमुदारहासं
पिञ्छावतंसमतसीकुसुमोपमानम् ।
पीताम्बरं कमलपत्रविशालनेत्रं
नन्दाङ्गनाप्रणयिधाम ममाविरास्ते ।। २०५

**वसुभूतिः** अयि विमानराज, अवतीर्यतां मनागमुष्मिन्सुमेरु-शृङ्गोद्देशे ।

[उभौ अवतरणं रूपयतः]

**नारदः** (निरूप्य, सानन्दम्)

अयमपि भुजवीर्योपार्जितं केशवाय
त्वरितममृतमेवोपायनं निर्मिमाणः ।
निपतति पदपद्मद्वन्द्वमुद्दिश्य भूमौ
पुलकितनिखिलाङ्गं दण्डवद्वैनतेयः ।। २०६

अहो, अस्य भाग्यातिरेकः कुमारस्य ।

अनादिनिधनं महस्सुखचिदात्मकं मायिक-
प्रपञ्चरचनस्थितिप्रलयकारि यल्लीलया ।
अवाङ्मनसगोचरं किमपि योगयुक्तात्मनां
तदौपनिषदं दृशाऽधिगतवानयं ब्रह्म यत् ।। २०७

अथवा, सन्दिष्ट एवासौ प्रियशिष्यः सानुभवेन भगवताशेषेण । (अलौल्येनेत्यादिश्लोकं[1] पठति)

---

1. अलौल्येनानृशंस्येन पित्रोः शुश्रूषणेन च ।
अपि वा विजयाद्धर्मात् प्रथते परमःपुमान् ।। ”
... पुटे प्रोक्तः श्लोकः अत्र अनुसन्धेयः ।।

वसुभूतिः (सचमत्कारम्) कथं भगवादादिष्टाभ्यां जयविजयाभ्या-मुत्थापितः किमपि भक्तिरसातिरेकप्रसृतसात्विकः किमपि विज्ञापयत्यपि पुष्करेक्षणम् ॥

नारदः तदितो नेदीयांसौ भूत्वा भगवन्तं श्रीवैकुण्ठनाथं प्रणम्योपश्लोकयन्तौ अनयोस्संवादाद्भुतावधानेन चक्षुश्श्रोत्रे जनुश्च सफलयावः ।

(इत्युपसरतः)

[ततः प्रविशति यथानिर्दिष्टो गरुडः सप्रणाममञ्जलिं बध्वा]

गरुडः स्वाभाविकाद्भुतसमस्तगुणाश्रयस्य
नास्ति स्तुतिस्त्वथ यथार्थगुणानुवादे ।
मूकस्सहस्रवदनोऽपि स यस्य तस्मै
सर्वात्मने नतिरियं तनुवाङ्मनोभिः ॥ २०८

किञ्च, विदितापराधं मां दीनदयालुरपि —

सर्वेश्वरे त्रिजगतां किमुताऽमृतस्य
नाथेऽपि जाग्रति हरन्तमदःप्रसह्य ।
पाटच्चरप्रवरमद्भुतशिष्टियोग्यं
पात्रीकरोतु भगवानमृतप्रदानात् ॥ २०९

(इति पुनस्साष्टाङ्गं भूमौ निपतति)

(नेपथ्ये)

ब्रह्मक्षत्रतपोनिधिः प्रियसखा शिष्यश्च यादृग्भवान्
शेषस्यास्य कलात्मनो मम तथास्म्यावेदितोऽनेन मे ।

ब्राहुद्युम्नजितं तव स्वममृतं संसाध्यतामीहितं
ताक्ष्योत्तिष्ठ वरं त्वलौल्यतपसस्तुल्यं वृणीष्वेप्सितम् ॥

गरुडः (उत्थाय, निरूप्य, स्वगतं) कथं स एव भगवान्योगविदचलप्रस्तरमुपगतः । नूनं भगवच्चरणसेवयाऽनुग्राहयिष्यति ।

(प्रकाशं) यः शास्ता मम कोऽपि तस्य भगवान्वागीश्वरश्चेदहं
को नाम स्वहितं विवेक्तुमथवावक्तुं पुरः श्रीपतेः ।
भूतानां समवायरूपिणि जडे नात्मन्यहंवादिन-
स्तेऽन्यं त्वात्ममहापलापजनितं संशोधयत्वीश्वरः ॥ २११

(नेपथ्ये)

विज्ञैरवेद्यमिदमज्ञसुवेद्यतत्त्व-
मात्मस्वरूपमुचितं च वचस्तथा ते ।
एवंविधो भवति यः स ममोपरिष्टात्
तस्माद्भवामि भवता गरुडध्वजोऽहम् ॥ २१२

गरुडः (सप्रणामं प्रतिगृह्य, स्वगतं) अहो महात्मनः शेषस्य मयि महत्त्वारोपणे परिकरः । यदत्रभवता भगवतश्छत्रभूतेन स्वस्याप्युपरिष्टात् कारितोऽस्मि । स्वोचितमनोरथाय प्रपतामि । (प्रकाशं) भगवन् भूतभावन, किमप्युपांशुव्रतं धारयामि । कृपाकटाक्षाञ्चलानुगृहीतस्तु निवेदयितुमिच्छामि ।

(नेपथ्ये)

ननु यथेष्टमुच्यताम् । गुरुचर्यातीव्रतपोव्रतधरस्य सुप्राप्य एवास्मिं तत्रभवतः ।

गरुडः (स्वगतम्) सत्यमेवमेवादिष्टोऽस्मि अनुभविना भगवता शेषेण (अलौल्येनेत्यादि पठित्वा,) [प्रकाशम्]

गुरोरपि गुरोर्गुरोः कमपि दक्षिणार्थं ददत्
तयोश्चरणरेणुभिस्त्वथ पवित्रितः स्यामिति ।

(नेपथ्ये)

एष तर्हि,

चतुर्दशजगन्निधिं सपरिवारणं मां वह-
त्वमेय्यमृतमन्तराप्यपजरामरः सारवान् ॥ २१३

गरुडः (सहर्षरोमाञ्चम्) [पुनर्भूमौ निपत्योत्थाय] परमनुगृहीतोऽस्मि ।

जगत्येकत्रमशके देव, त्वत्कुक्षिवर्तिनाम् ।
उद्वहन्नात्मनात्मानं मय्यर्पय यशस्सुखम् ॥ २१४

वसुभूतिः देवर्षे, श्रुतः कुमारवीरे भगवत्कृपातिरेकः ।

नारदः बाढम् । दृष्टश्च, यदेवमकुतोभयः स्वबलानुरूपं सविशेषमशेषभुवनोदरमुद्वोढुमाशयं प्रकटितवान् ।

वसुभूतिः (विलोक्य, ससम्भ्रम्) नन्वियं, सावसरं जयविजयाभ्यामावेदितयोरावयोः, दिशि भगवतः चतुर्वर्गलक्ष्म्या सादरमवेक्ष्यमाणा कटाक्षत्रिभागा कृपादृष्टिः वलति ।

नारदः तत्त्वरितं साष्टाङ्गं प्रणम्य, लालनोपश्लोकेनेन वाचोऽपि साफल्यमनुभवावः ।

उभौ (ससम्भ्रमं भूमौ निपत्योत्थाय, सविनयमञ्जलिं बद्ध्वा)

मन्दाराणां दाम दिव्यं दधानं
देवैर्वन्द्यं दीव्यदिन्दीवराक्षम् ।
नन्दामन्दानन्दसन्दोहकन्दं
वन्दे देवं देवकीनन्दनं तम् ।। २१५

नारदः आशंसा ये रिरंसा विजहति परमाः केऽपि भूता नृशंसाः
ते हंसा येषु संसादितमनस इह स्वेहितं साधयन्ति ।
संसारध्वान्तहंसाः कचनिचयसदृग्मेचकास्सप्रशंसाः
कंसारिश्रीमदंसाञ्चितशुचिरुचयः पान्तु नस्तेऽवतंसाः ।।

अपि च –

ग्राहादामोचयद्या गजमपि समजं या गवां तीव्रवर्षा-
द्गर्भं ब्रह्मास्त्रदाहादसुमपि पुनः प्राणयद्यान्तरायात् ।
यारक्षद्याज्ञसेनीं रिपुसदसि तथा दीनबृन्दे दयार्द्रा
दृष्टिः सा मे दारिद्रां दमयतु विनतातन्दनस्यन्दनस्य ।।

वसुभूतिः (स्वगतम्) अये, वर्तमानकुमारवृत्तमप्यनुवर्णितं देवर्षिणा । भवतु, अहमपि यथागमं स्तोष्यामि ।

(उच्चैः)

स्वच्छन्दासन्नबृन्दावनपवनवलन्मौलिसन्दानितस्व-
र्मन्दारस्रङ्मरन्दाञ्चितमणिरुचिभिः स्रागमन्दादरेण ।
वन्दारस्तोमवृन्दारकपतिभिरतिक्रम्य वृन्दानि जुष्टाः
शब्दा नः सन्तु नन्दाङ्गजचरणयुजो गोष्ठसन्दावलेशाः ।।

अपि च –

वालक्रीडासु वृन्दावनभुवि चकितं पश्यति स्वीयवृन्दे
मैरेयावेशघूर्णन्नयनमविशदव्याहृतिव्यस्तगात्रम् ।
आमृश्य स्रस्तकेशां मुहुरथ यमुनां व्योमनीलाम्बरेण
स्वीयं संव्यानमित्याकलितमवतु नः स्मेरिणःशार्ङ्गिणोऽङ्गम् ॥

गरुडः (नारदतुम्बुरू विलोक्य, नेत्रसंज्ञया विनयमावेद्य, स्वगतम्) तदहमपि उपश्लोकयामि (अञ्जलिं बद्ध्वा) उच्चैः[1]

कालिन्दीकूलकुञ्जक्षितिषु कुतुकतः कौमुदीकेलिकामे
क्षामे कन्दर्पकोपात्किमु कनकमये कल्पनाकुङ्कुमेन ।
कल्याणीनां कदम्बे करकलितकराः कोष्टकाकारकान्ताः
क्रीडाः कृष्णस्य कष्टां कलिकलुषकृतां कारणां कालयन्तु ॥

अपि च,

मातुर्हिंसा निगमवचसां निन्दनं धर्मपत्न्याः
त्यागो नीचे पिबति च सुरां हिंसके युक्त एव ।
वेदान्वेषी भुवनवलयस्थापनोद्धारकारी
यन्मज्जानां सदसि नृपशोलेढि चित्रीयतेतत् ॥ [?] २२१

नारदः (जनान्तिकं) सखे गन्धर्वराज, दृष्टं श्रीमतः कुमार-वैनतेयस्य काव्यकलायामपि प्रावीण्यम् ?

---

1. Ms. omits 'प्रकाशम्' ।

**वसुभूतिः** (तथैव तं प्रति) देवर्षे किं नामास्य न लोकोत्तरम् ।

धातुस्सुता कविमुखाम्बुजमास्थिता यत्
वाचां प्रपञ्चमपरं वितनोति युक्तम् ।
हित्वा विरोधमथ चेत्तनयां पयोधे-
रेकत्र वासयति हन्त सुगन्धि रुक्मम् ॥ २२२

**नारदः** हन्त, गृहीतानन्तदृगन्तसंज्ञाभ्यां सहैव जयविजयाभ्यां सहसैवान्तर्दधाति व्योमयानं वैकुण्ठनाथस्य ।

**वसुभूतिः** बाढम् । नन्वयमपि गुरुचर्यां निर्वर्त्य त्वरिततरं सन्निधेय-मित्यधिगतभगवद्भ्रूभङ्गमुद्रः क्षिप्रममृतकुण्डमुद्धृत्य, आवां सविनयमवलोकयन्, अवाङ्मुखमुत्पतत्यभिनवविष्णुरथः ।

**नारदः** तत्साधयतु भवान्विमानेन । अहमपि विहायसैवालक्षितः समराध्वरपुच्छमवलोकयन्, कार्यसिद्धि यावत् एनमनुगच्छामि । (यथोक्तं रूपयतः)

**गरुडः** (यथोक्तमभिनयन्) अहो नु खलु भोः -

कामं फलाय महतेऽपि तपांसि सन्तु
नेदृक्तु किञ्चन यथा गुरुवृत्तिरुच्चैः ।
सङ्कल्प एव भगवत्पदसन्निधानं
याकारयत्यथ, फलं तु भवेत्किमस्याः ॥ २२३

(पुरोऽवलोक्य) कथमयं,

द्रवन्दृष्ट्वा पृष्ठस्थितनयनवृन्देन तरसा
परावृत्याऽऽरज्यन्नयननलिनोदञ्चिततनुः ।

सुधासध्यूङ्ङेष द्विषदिति मिषान्यद्द्रवयितुं (?)
दधौ दध्यङ्कस्थान्कथमपि तदस्त्रं प्रहरति ।। २२४

तत्किमेतद्व्यवस्यामि । अथवा,

भ्राम्यन्मन्दरवप्रधृष्टकमठप्रष्ठप्ररोहत्किणं
मूढप्रेष्ठकशेरुकादृढतरं पृष्ठं स्थविष्ठं मम ।
स्पृष्ट्वा स्पष्टकृपीटयोनि झटितिप्रोच्चचण्डखण्डं स्फुट-
द्रुष्टं निष्टनदद्य वज्रमचलापृष्ठे लुठत्तिष्ठतु ।। २२५

(निरूप्य)

साक्रन्दं किमु तीव्रवेदनमिव प्रोद्घुष्टघण्टास्वनै-
रुद्वातात्मिमभूतपूर्वविफलां तां चोत्थरोषादिव ।
दृष्टवा मत्पृथुपक्षतिप्रतिहतं प्रभ्रष्टमुर्व्यां स्वरुं
सौहार्दादिव विस्मितः सुरपतिः स्नेहादिवाभ्येति माम् ।।

भवतु नाम । यावन्मामयमभ्युपैति, तावदहमपि विनयमा-
वेदयन् ।

यदस्थिभिरिदं वज्रं कृतं तस्यास्य चास्य वा ।
रक्षामि मानं पक्षाग्रपर्णमेकं तनु त्यजन् ।। २२७

यतः,

अभ्यर्थितस्सुरगणैः किल वृत्रहत्यै
राजर्षिरस्थिनिचयं शतकोटिहेतोः ।
प्राणान्प्रियानपि विहाय ददौ दधीचि-
र्धर्माय, गुण्ययशसे स न कस्य मान्यः ।। २२८

(नेपथ्ये)

सख्यं मया सह तवास्तु वरं वृणीष्व
यं तार्क्ष्य काङ्क्षसि, बलं तु वद स्वकीयम् ।
कृत्यं न चेदमृतमर्पय, दास्यसि त्वं
येभ्यस्तु तेऽद्य, विबुधान् प्रतिबाधयेयुः ।। २२९

गरुडः हन्त, नेदीयान्भूत्वा सस्नेहं समाभाषते भगवान्सहस्रनयनः । (सविनयं) भगवन्मेघवाहन,

यद्गर्भस्य ममापराधमखिलं क्षान्त्वा स्वसख्यं ददा-
स्येतत्ते मघवन्महत्वसदृशं पर्याप्तमुच्चैर्मम ।
देवेन्द्र, त्वदनुग्रहान्मम मतिर्धर्मे सदाधीयतां
सोमांशे तु रहस्यमस्ति किमपि, ध्यानेन तद्दृश्यताम् ।।

(नेपथ्ये)

ज्ञातोऽत्र यः प्रतिविधिस्तव चोचितं तत्
तत्तादृगेव फलतः प्रकटत्वमेतु ।
पक्षात्तवास्य गलितस्य तनूरुहस्य
नान्तं सुपर्ण कलयामि बलं तु किं स्यात् ।। २३१

गरुडः (सप्रणामबहुमानं) भगवन्, वास्तोष्पते, विदितमेवैतदत्रभवतः यत्किल कोविदाः स्वकुलसंस्तवमकारणं न प्रशंसन्ति, किं पुनः आत्मस्तवम् । तथापि

उक्तस्सखेति भवतेति वदामि किञ्चित्
क्षोणीं ससागरवनां सनगान्तरीपाम् ।

पक्षाग्रकेण सततं वहतो न मेऽस्ति
कश्चित्क्लमः सुरपते भवता सहापि ॥ २३२

(नेपथ्ये)

युद्धदानदयावीरे सर्वं सम्भाव्यते त्वयि ।
भुवनान्युदरे यस्य वाहस्तस्यासि चोचितः ॥ २३३

गरुडः कथं संज्ञयैव चिकीर्षितमावेद्य, त्वरयन्नेव मां अन्तर्हितः पाकशासनः । तदहमपि—

उल्लङ्घ्येमां लघु वसुमतीमब्धिमभ्रङ्कषोर्मिं
पश्यन्पारं परमनुदिवः संयताभ्यात्तसोमः ।
यत्रस्थाम्बा किमपि मनसि ध्यायति श्रेयसे मे
दुष्टैर्नागैरुपधिनिकृतिप्रापिता प्राणहेतोः ॥ २३४

(अवतरणं रूपयन्नेव, निष्क्रामन् प्रविश्य प्रथमं जवनिकान्तरं, निरूप्य) इयं मदागमपथार्पितदृष्टिरेव विनता (अमृतकुण्डं निवेद्य ससम्भ्रमं पादयोः निपतति)

विनताः (सस्नेहास्रं परिष्वज्य, मूर्ध्नि परिचुम्ब्योपाघ्राय)

नानाविधप्रहरणाङ्कितमङ्गकं ते
जात, स्पृशामि बत पाणितलेन भूयः ।
धेनुः शकृत्करि[1]मिवाद्य विलेह्मि किं वा
नृत्यामि मूर्धनि निधाय न[मा]यामि चोच्चैः ॥ २३५

---

1. शकृत्करि – calf

**गरुड:** (सविनयस्मेरं) एवमतिप्रसक्तवाचमत्रभवतीं परिजनः पुत्र-वात्सस्यमूढां मंस्यते ।

**विनता:** वत्स, इतः प्रस्थितस्येदानीं यावत्वृत्तं समासेन श्रोतु-मिच्छामि ।

**गरुड:** ननु विस्तरेणैव भगवतो नारदस्य मुखात् सर्वसमक्षं श्रोष्यसि । उद्घोषयामि तावदमृतं नागेभ्यः ।

(प्रविश्य पटाक्षेपेण नारदः)

**नारद:** एषा देवी कद्रूः, सुतोत्तमेन भगवता शेषेण सविनयं किमपि परिशङ्कमाना, देवीं सभाजयितुं इत एवाभिवर्तते ।

(सर्वे ससम्भ्रममुत्तिष्ठन्ति)

[ततः प्रविशति कद्रूः शेषश्च]

**शेष:** अम्ब, कथं वेदमुचितं भवति ?

**कद्रू:** जात अनन्त, क्षणं जोषमास्यताम् । श्रोष्यस्यदः प्राप्तकालं देवगुह्यम् ।

[सर्वे यथोचितं प्रणामाशीर्भिः परस्परं सम्भाव्य, यथोचित-मुपविशन्ति]

**कद्रू:** (सपाणितलस्पर्शं) हला, विनते,

**विनता:** (सविनयं) आज्ञापयत्वार्या

**कद्रू:** भ्राता पितृष्वसुरयं गुरुरादिविद्वान्
हैरण्यगर्भिरयमत्रभवत्यथेमौ ।

आकर्ण्य शेषगरुडौ गुरुशिष्यभूतौ
किञ्चिद्रहस्यमथ वेत्स्यथ मेऽपराधम् ॥ २३६

विनता: कथं हि नामैतत्स्यात् ?

शेषगरुडौ: (जनान्तिकं) भगवन्, न खल्वल्पेनैव कारणेन भवितव्यम् । यदेवमत्रभवती धर्मवादिन्यादिशति ।

नारद: एवमेतत् ।

आकर्णयन्ति जनताकटुकापराधान्
गृह्णन्त्यपि स्वशिरसा वितथापराधान् ।
कुर्वन्त्युपक्रममथायतिमीक्षमाणाः
किं नाम नार्भकहिताय गुरुस्सुतं वा ॥ २३७

कद्रू: यथाविदितं वर्षीयसाम् श्रूयतां तावत् । पुरा किल तत्रभवत्सु मारीचचरणेष्वसन्निहितेषु यदृच्छया लोकाननुचरन् अस्मदावसथमनुप्राप्तः तत्रभवान्दुर्वासाः ।

विनता: अपि नाम य[प]दर्घ्यप्रदानाय फलकुसुमानि आदातुं अनुप्रेषिताहमार्यया ?

कद्रु: अथ किम् ? ततः कौमारसुलभकौतूहलेन क्षणं विलम्बितां असौ शप्तवान् पञ्चवर्षशतान्येषा दासीभावं व्रजत्विति ।

नारद: सत्यं ईदृगेवासौ रुद्रावतारः सुलभकोपो महर्षिः ।

शेषगरुडौ लगति ग्रन्थः

कद्रू: ततः किमर्थं अस्थाने तपोव्ययं करोति भगवानित्याभाषमाणां मामपि शप्तवान् "पुत्रसन्तानसंहर्त्री भवत्यपि भविष्यती"ति ।

**शेषगरुडौ** इदमपि युज्यते ।

**विनता** अहोऽस्य कोपातिरेकः ।

**नारदः** कथं नामायमपि शुश्रूषितगुरुजनायाः पतिदेवतायाः क्रोधानलप्लोषान्मुक्तः ?

**कद्रूः** ननु आवेदयाम्यात्मनोऽपि चापलं गुरुषु ।

गर्भं त्वमप्यपरिपूर्णतनुर्भवेति
शप्तस्त्वसावपि मया, प्रणमन्नुवाच ।
मातः, क्षमस्व शिशुकस्य ममापराधं
तादृग्भवामि, कुरु मां तु सुपर्णमुच्चैः ॥ २३८

इत्येवमर्थयमान एव सवैलक्ष्यं निर्गतः ।

**विनता** (स्वगतं) अपि नाम स एवायमरुणो भवेत् ?

**नारदः** देवि, उचितमेवैतत् न खलु प्रत्यपकारमन्तरा दुर्जनः प्रशाम्यति साममात्रेण । यतः

गाम्भीर्यसौजन्यपरोपकार-
ख्यात्यै यथा साधुजनाः क्षमन्ते ।
तथैव तेषां तदपाचिकीर्षुः
खलोऽन्यकाण्डे परुषं विवक्ति ॥ २३९

**शेषगरुडौ** (परस्परं तलेन तलमास्फाल्य) हन्त, लग्नो ग्रन्थः । स एव चायमत्रभवानरुणः ।

**नारदः** सङ्गतमिदानीं सर्वम् । नूनमत्रभवत्याप्यत एव पुत्रसहस्रं पत्युर्वृतं दोषबहुलं च ॥

कद्रूः वाढम् । नन्वस्या अपि सोदरसपत्न्याः अन्यदास्यनिरासाय अनङ्गीकृतशासनानां दुष्टोरगाणां शापयोजनाय च सुपर्ण वाल्येऽनया सह क्रीडितास्मि ।

नारदः आं, अत एव च ।

"पारीक्षितस्य यज्ञे वः प्रधक्ष्यति हुताशनः ।
अवशिष्टास्तु ये दुष्टाः सुपर्णस्तान्विनेष्यति ॥" २४०

इतीमं शापमुपश्रुत्य धर्मज्ञतामत्रभवत्याः प्रशंसन् भगवन्तं काश्यपं सान्त्वयन्, अस्मै लोकहिताय विषहरणीं विद्यां दत्तवान् मे पिता जगतां पितामहः ।

विनता - नन्वहमपि अत एव रहस्यवेदिन्या द्वावेव सुतौ सुपर्णौ वरयितुमाज्ञप्ता ! ॥

कद्रूः वाढम् । नन्वहमपि

अष्टावनन्तप्रभृतीन्कुलार्थान्
शापार्थमन्यान् समवाप्य पुत्रान् ।
तार्क्ष्यारुणाभ्यां भवतीव पुत्रि-
ण्यहं पुनः शेषभुजङ्गराड्भ्याम् ॥ २४१

विनता- (सविनयबहुमानम्) किं वहुना,

भक्तिप्रणाशपरिवर्धितगुर्ववज्ञा-
घोरान्महावृजिनतः स्वसुतानुपेक्ष्य ।
स्नेहात् सहोदरगुरुत्वकृताद्भुतया
धर्मज्ञयाद्य ससुता परिरक्षिताऽहम् ॥ २४२

(इति कद्रूचरणयोर्निपतति)

कद्रूः (विनतामुत्थाप्य "एहि भगिनीति" सास्रं परस्पर-मालिङ्गतः)

शेषः अहो नु खलु भोः !

अन्धस्सुदृष्टिमिव मूढ इवोपदेशं
ध्वान्तावृतोऽर्कमिव बद्ध इवापवर्गम् ।
एतद्रहस्यमधिगम्य विशुद्ध्यति द्राक्
गङ्गोत्तरं सर इवोद्धृतकल्मषं नः ॥ २४३

गरुडः (सविनयम्)

छन्नत्वं समुपेयुषो भगवतश्छात्रत्वभागप्यहं
नीतोऽस्मि ध्वजमण्डनत्वममुना स्नेहेन पुत्रे मृते ।
अद्यैवामृतमाहरं(रं)त्वमपि तन्मातर्गुरूणां गुरुः
दोषान् पावय वाङ्मनस्तनुकृतान् गर्भस्य कृत्स्नान् मम ॥

अपि च,

शारीरकलुषं बाल्ये शोधयन्त्या न तत्कृतम् ।
रहस्यमेतद्देवानां वेदयन्त्या यथान्तरम् ॥ २४५

(इति पादयोर्निपतति)

कद्रूः (सस्नेहमुत्थाप्याङ्कमारोप्य मूर्धनि परिचुम्ब्य)

अतिदेवासुरं कर्म कर्ता विष्णुरथः स्थितः ।
अपि त्वं जात, गरुड, षाण्मासिक इवासि मे ॥ २४६

नारदः अहो रमणीयता संविधानस्य ।

दैवं रहस्यमिदमद्य निवेदयन्त्या
देव्या स्वसुः शुचमिमां समपानुदन्त्या ।
धर्मक्षमाधृतिदयानिधिभूतयोच्चै-
रप्युद्धृतं त्रिजगतामपि शोकशल्यम् ।। २४७

विनता- अथामुना समाहृतस्य सोमस्य कथमित्रात्रभवती प्रतिपत्तिं मन्यते ।

शेषः सम्यगुपक्षिप्तं दूरदर्शिन्या कनिष्ठाम्बया ।

कद्रूः आं । पीत्वा सोमममर्त्यत्वात् शापातीताः सुदारुणाः ।
वैनतेयवशेनैते तिष्ठेयुर्दुष्टपन्नगाः ।। २४८

शेषः पुनस्तदवस्थ एवैवं धर्मव्याकोपः प्रजानामपत्यकृतः ।

गरुडः यद्येवमेवानुमतमम्बायास्तदहमप्यावेदयामि ।।
(कद्रूशेषयोः कर्णे एवमेवम्)

उभौ- साधु, धार्मिकशिरोमणे, कुमारवीर, साधु ! ।

नारदः (स्वगतम्) नूनमिदमेवैतद्भविष्यति यदिदानीं महेन्द्रगरुडाभ्यां पथि विमृष्टम् । (प्रकाशम्) तदमुष्मिन्नेव प्रमृष्टकश्यपाग्निशरणे कुशसंस्तरोपरि स्थाप्यतां अमृतकुण्डः-कुमारेण ।

शेषः अमी च काद्रवेयाः पयोधावाप्लुत्य कृतजप्यमङ्गलाः पर्युपासताम् ।

नारदः ननु अङ्गीकृत्य आह्निकस्वस्त्ययनाय संसाधयन्तु ।

**कद्रू:** बाढम् ।

**गरुड:** (कुशसंस्तरेष्वमृतमारोप्य) भो भोः काद्रवेयाः ! उदीर्यतामिदानीं सत्यसन्धैः ।

(नेपथ्ये)

प्राप्तस्सोमोऽयमस्माभिः समुता विनताम्बिका ।
अनियोज्यास्तु नागानां गरुडाद्यप्रभृत्यपि ।। २४९

**गरुड:** ननु त्विरुच्चैः उद्घुष्यतां । उभये हि देवमनुष्याः शृश्वन्तु ।

(हस्तमुद्यम्योच्चैः)

आदित्यरुद्रवसवो मरुतश्च दस्रौ
भूतानि पञ्च विबुधाश्च महेन्द्रमुख्याः ।
ये सोमपाश्च ऋषयस्त्वथ भूर्भुवस्त्वः
शृण्वन्त्विमां गिरममीमिरुदीर्यमाणाम् ।। २५०

(नेपथ्ये कलकलः)

(सर्वे ससंभ्रममाकर्णयन्ति)

(पुनर्नेपथ्ये)

*स्नात्वा नागानुपनिपततः सन्निपत्यान्नकुण्डः
श्येनो भूत्वोत्पतति वियता सोमतृप्यत्तुराषाट् ।
दर्भान् पुण्यानमृतसदनान् केवलं लेलिहाना
लौल्योद्रेकाद् व्रजति रसना प्रत्युत द्वैधमेषाम् ।। २५१

**गरुड:** नूनमग्निशरणात्त्रेताया इवाशरीरिणी वाक् ।

[सर्वे ससम्भ्रममाकर्णयन्ति]

---

* दृष्ट्वा नागानुपनिपततः सन्निपत्यान्नकुण्डं
श्येनो भूत्वा हरति वियता ...... । इति पाठः सुगमो भाति ॥

शेषः उचितमेवैतत्

सुरेभ्यो नेतरेषां हि सुधामन्धः प्रचक्षते ।
अस्थाने यतमानानामपकारोऽपि युज्यते ॥ २५२

नारदः ननु प्रागेवावेदितमासीत् कुमारेण उपधिकृतः क्षुद्रात्प्रत्युपधिरेव पराभविष्यतीति ।

गरुडः तत्किमिति व्याप्तायितमन्यथा ?

विनता - (अश्रूणि प्रमृज्य) किमन्यर्थयाम्यहमधुना विजयिनं कुमारवीरम् ।

गरुडः नन्वाज्ञापय ।

विनता - (समाश्वस्य) आनीयन्तताममी भ्रातरः प्रतिहतमनोरथाः शिशवः ।

गरुडः (सत्वरं निष्क्रम्य नागानाश्वास्य, पृष्ठमारोप्य प्रविश्योपनयति)

नागाः (विनतायाः पादयोर्निपत्य) अम्ब, क्षम्यतां गर्भाणामपराधसहस्रम् ।

विनता– नागानुत्थाप्याङ्कमारोप्य) ननु किमपराद्धं वत्सैर्मातृशासनमनतिक्रामद्भिः धर्म्यैः ।

श्लाघ्यं सदा गुरुजनस्य तथार्भकाणां
दास्यं मुदा परमयाऽहमुदाचरामि ।

यद्वः सुधामधि मुधा समभूत्स्पृहेयं
तन्मे मनस्तुदति नूतनमद्य शल्यम् ॥ २५३

नारदः भगवन्तः काद्रवेयाः,

न वः पित्रा माता सहजनिभिरपीतममृतं
समानीतं येन प्रसभमथ तेनापि न यदि ।
विपादस्तन्मा वो भवद् अयमनन्तस्य वचने
स्थितानां धर्म्याणां प्रियसुहृदधीनश्च गरुडः ॥ २५४

कद्रूः कुमारवैनतेय, दीनौरसवात्सल्यं ममापि मुखरयति ।

(सास्रगद्गदम्)

आदिष्टोऽसि मयैव त्वं सापराधान्प्रशासितुम् ।
धर्म्यानिमांस्तु शिशुकाननुजानिव पालय ॥ २५५

(इति नागान् गरुडस्य हस्ते समर्पयति)

गरुडनागाः "एते भ्रातरः" (इति सास्रं परस्परमालिङ्गन्ति)

शेषः आयुष्मन् गरुड ! सोदरस्नेहो मामपि मुखरयति ।

यथैव कद्रूर्विनता तथा मे
सहोदरेभ्यस्त्वतिरिच्यसे त्वम् ।
प्रदीयतां तद्गुरुदक्षिणेयं
धर्मस्थिता हि *प्रतिपालनोच्चैः ॥ २५६

गरुडः (नागान्गृहीत्वा शेषस्य चरणयोर्निपत्य) भगवन्
अष्टादशविद्यानिधे सहस्रवदन,

---

* प्रति पालिता

निस्तीर्योपधिकृतमप्रशस्यमेषां
धर्मेण स्वयमुररीकरोमि दास्यम् ।
कामं मे भवतु समत्वमेव मात्रोः
पित्रोरप्यधिकतरास्तु शेषपादाः ॥ २५७

नारदः अहो परिणामरमणीयता निर्वहणस्य ।

शेषेण यत्र गरुडस्य गतोदरेण
कद्रूस्तथा विनतया सह सौहृदं च ।
सौपर्णमेतदमृताहरणं पवित्र-
माख्यानतां जगति यास्यति गीयमानम् ॥ २५८

(अथ नेपथ्यार्धप्रविष्टः प्रतीहारः)

प्रतीहारः एष तपोवनात्प्रतिनिवृत्तः तातकश्यपः सह वालखिल्यैरनुप्राप्तः (सर्वे हर्षं नाटयन्ति)

नारदः ननु प्रकृष्टकल्याणोदर्का एव गृहभेदविगमा भवन्ति ।
(सर्वे ससम्भ्रममुत्थाय, प्रत्युद्गम्य, प्रणामादिभिः यथोचितं परस्परं सम्भाव्य, प्रविश्य, यथोचितमुपविशन्ति)

नारदः देवि दाक्षायणि विनते! यन्मयोक्तमासीत्,
"पश्येयं त्वां पतिसुतयुतां पूर्णकामां विशोकाम्"
इति । अपि नाम सोऽहमधुना सत्याशीस्संवृत्तः ?

सर्वे – न खलु अध्यक्षीकृतब्रह्मणां ऋषीणां वाचो विपरियन्ति ।
किं पुनः हैरण्यगर्भस्य भवतो देवर्षेः !

कश्यपः ज्येष्ठ तात ! देवर्षे !

नारदः सादरमाज्ञामयतु सुरासुरगुरुः ।

कश्यपः जानात्येव भवान् अमीषां मरीचिपानां सङ्कल्पम् ।

नारदः बाढम् ।

कश्यपः तममी समानीतसम्भाराः प्राप्तकालं मन्यन्ते भगवन्तो वालखिल्याः ।

नारदः यदादिशन्ति तपोवृद्धाः । ननूत्सवपरम्परैवेयमनुप्राप्ता ।

कश्यपः तदारोहत्विमां व्याघ्रचर्मास्तृतामौदुम्बरीमासन्दीं कुमार-वैनतेयः पक्षिराज्याभिषेकाय ।

नारदः (सहर्षम्) कुमार ! वैनतेय, क्रियतां तातादेशः ।

गरुडः (सहर्षाद्भुतम् आसन्द्यारोहणमभिनयति)

कश्यपः शातकुम्भमयकुम्भसंभृतैः
तीर्थवारिभिरमी द्विजोत्तमाः ।
वैनतेयमभिषिच्य घोषय-
न्त्वन्तरिक्षचरचक्रवर्तिताम् ॥ २५९

वालखिल्याः यदादिशति तातः ।
(इति गरुडस्य शिरसि सुवर्णकलशावर्जनं नाटयन्ति)

कश्यपः औदम्बरेऽस्ति चमसेऽभिषुतोऽष्टवर्गः
शाखामुदुम्बरमयीमभिषेचनीयाम् ।
आदाय नागपतिरेष महाभिषेक-
मैन्द्रं तनोतु विनतातनयस्य मूर्ध्नि ॥ २६०

नारदः भगवन् भुजगेन्द्र, अभिषिच्यतां ताताज्ञया विहगेन्द्रपदे प्रियशिष्यो विष्णुरथः ।

[शेषः सहर्षं ससम्भ्रममुत्थाय औदुम्बरशाखया गरुडस्य शिरसि अभिषेकं रूपयति]

नारदः [निरूप्य] हन्त, जगति हर्षाद्वैतं वर्तते ।

तथाहि –

रत्नैः पुष्पफलैः पतत्त्रिनिवहाः सर्वे ददत्यर्हणां
प्रीताः कुण्डलिनः फणामणिगणैर्नीराजयन्त्यादरात् ।
गन्धर्वाप्सरसः स्तुवन्ति कुसुमैर्वर्षन्ति सेन्द्राः सुराः
सान्द्रं दुन्दुभिढुण्ढुमायितमिदं दिव्यं समुज्जृम्भते ।। २६१

[कश्यपकद्रूविनताः "प्रियं प्रिय"मिति परस्परमवलोक्य हर्षोत्कर्षमभिनयन्ति]

शेषः [सस्नेहं पाणितलेन गरुडमामृश्य]

महात्मन्, पत्त्ररथेन्द्र! किं ते भूयः प्रियमुपकरोमि ?

गरुडः (सविनयं) भगवन्नितः परमपि प्रियमस्ति ?

दास्यं कौस्तुभलक्ष्मणः सुरपतेस्सख्यं तव छात्त्रतां
मात्रोर्बन्धुजनस्य निस्तुलतया प्रीतिं परां चेतसः ।
ऐश्वर्यं पतगव्रजस्य जगति स्फीतं यशश्चाप्यदः
पीयूषेण विना जरामरणयोः प्राप्याथ किं वार्थये ।। २६२

तथापीदमस्तु भरतवाक्यम् ।

दितिजनिषु सकुत्सा: पद्मयोनौ सलज्जा:
सुरपरिषदि मूकाश्चन्द्रमौलौ विलक्षा: ।
परिचित इव तारामैत्रकेणेव शौरे:
मुखशशिनि समुक्ता:पान्तु व: श्रीदृगन्ता: ।। २६३

अपि च

एतन्नैगमिकं पवित्रमृषिभिर्जुष्टं समस्तेष्टदं
नीतं श्रव्यधुरां सुपर्णचरितं पाराशराद्यैर्भुवि ।
भूयस्तद्भरतप्रणीतविधिना दृश्याभिनेयार्हतां
यत्नादानयत: कवेश्श्रममभी जानन्तु सामाजिका: ।। २६४

( इति निष्क्रान्तास्सर्वे )

|| इति विनतानन्दनामाङ्क:, समाप्तश्चायं चण्डगरुडो नाम
व्यायोग: ||



## ॥ श्लोकानुक्रमणिका ॥


| श्लोकः | पृष्ठम् |
|---|---|
| अकाले चापलादात्मा | 2 |
| अगणितगिरि | 61 |
| अग्नाविष्णू तव | 58 |
| अङ्गानां क्रकचेन | 20 |
| अङ्गुष्ठोदरवर्ष्मण: | 18 |
| अण्डद्वयं मम समर्प्य | 22 |
| अतिदेवासुरं कर्म | 82 |
| अत्र स्थिता: पत्ररथा: | 50 |
| अथैक: प्रतपति | 21 |
| अधीतैर्विद्यानां | 7 |
| अश्वैर्यं कारयति | 21 |
| अनादिनिधनं मह: | 68 |
| अन्तर्वज्रसुदीप्त | 9 |
| अन्ध: सुदृष्टिमिव | 82 |
| अन्य: स्वामी भवतु | 35 |
| अन्योन्यशापमधिगम्य | 58 |
| अपि नाम सत्यवचन: | 10 |
| अभिनवमिव धातु: | 34 |
| अभ्यर्थित: सुरगणै: किल | 75 |
| अमन्दे मन्देहप्रचुर: | 37 |
| अमृतहरणपरिकुपित | 66 |
| अयमपि पृषदाज्य- | 60 |
| अयमपि भुजवीर्यो- | 68 |
| अयमपि भुवनानां | 63 |
| अयमपि शतमन्यो: | 62 |
| अयुतमथ सहस्रं | 15 |
| अरुणस्यानुज: | 42 |
| अर्थान्नियन्ती | 44 |
| अर्वागुत्पत्य वेगेन | 57 |
| अलौल्येनानृशंस्येन | 15 |
| अवध्या: शत्रवो | 19 |
| अश्वक्रेदप्रभृतय | 64 |
| अष्टावनन्तप्रभृतीन् | 81 |
| असमयमृतिमुच्चै: | 23 |
| अस्मत्तपोऽर्धपरिबृंहितया | 18 |
| आकर्णयन्ति जनता- | 79 |
| आकर्ण्य तातवचनं | 56 |
| आकृष्याकृष्य पक्षाभ्यां | 37 |
| आगङ्गासिन्धुसङ्गादपि | 49 |
| आदित्यरुद्रवसवो | 84 |

| श्लोकः | पृष्ठम् |
|---|---|
| आदिष्टोऽसि मयैव त्वं | 86 |
| आधारं विरचय्य | 59 |
| आपादलम्बिवनमालं | 68 |
| आपृच्छन्ति मनीषया | 55 |
| आप्लुत्य द्युनदीजले | 55 |
| आभीरीभिर्घनानां | 3 |
| आमीलन्तीं प्रकामीकुरु | 30 |
| आम्नायशीलन | 56 |
| आर्य न खलु भवादृशाः | 39 |
| आलिङ्ग द्रुततरमेहि | 42 |
| आशंसा ये रिरंसा | 72 |
| आशापर्यन्तभूभृत्कुहर | 62 |
| उक्तः सखेति भवतेति | 76 |
| उच्चावचं विदधतः | 26 |
| उत्पन्न एव | 38 |
| उत्पातान् विविधान् | 59 |
| उद्विग्नचित्तैर्जनतापवादात् | 27 |
| उद्यम्यते किं शेषेण | 41 |
| उपरि विततपक्षं | 41 |
| उल्लङ्घ्येमां लघु | 77 |
| ऊर्ध्वैरनभ्रनिष्कम्पैः | 27 |
| एकतो भगवान् कालः | 25 |
| एतद्दलं गोपुर | 59 |
| एतद्विश्वहितायनि | 55 |
| एतन्नैर्ऋतदिश्यनूपविपिन | 32 |
| एतन्नैगमिकं पवित्र- | 90 |
| औदुम्बरेऽस्ति चमसे | 88 |
| क इव हृदयशून्य- | 37 |
| कच्चिद् ब्रह्मद्विपस्त्वं | 44 |
| कथमपसरतीव | 64 |
| कररुहरदनाङ्काः | 33 |
| कल्पान्तकाल- | 61 |
| कामं फलाय महतेऽपि- | 74 |
| कायक्लेशैर्विनयमधुरैः | 10 |
| कालः करोति | 25 |
| कालिन्दीकूलकुञ्ज- | 73 |
| कुलिपिमनवधातुः | 23 |
| कूटान्यञ्जनभूभृतः | 32 |
| कूर्मोऽन्तः सलिलं | 47 |
| कूर्मोऽपि प्रतिनिनदोप | 51 |
| कूर्मोऽयं दशयोजनानि | 51 |
| कृतिनः के न बध्नन्ति | 6 |
| क्रुद्धाखण्डलवज्रखण्डन- | 12 |
| क्षतं भवतु शोणितं | 17 |
| क्षितिं प्रक्षाल्याद्भिः | 18 |
| क्षोणी ग्रामति | 40 |

| श्लोकः | पृष्ठम् | श्लोकः | पृष्ठम् |
|---|---|---|---|
| गरुदुद्धूतरजसा | 63 | ज्ञातोऽत्र यः | 76 |
| गरुडं गाढमालिङ्ग्य | 27 | तपस्यत्येष भगवान् | 39 |
| गर्जन्नीलघनौघ | 8 | तपोविद्यावृद्धैः | 29 |
| गर्श त्वमप्यपरिपूर्णतनुः | 80 | तपोऽव्ययमकुर्वाणैः | 47 |
| गाम्भीर्यसौजन्य- | 80 | तातादिष्टास्तेऽप्यवाच | 53 |
| गर्भितविरोहवीजं (प्रा. श्लो.) | 8 | तुण्डाग्राग्रनखक्षताः | 64 |
| गावोऽग्रथः सुरगणाः | 45 | त्यक्त्वा स्वीयान् | 35 |
| गुरोरपि गुरोर्गुरोः | 71 | दण्डी जटी | 12 |
| गृह्णीतोद्धन विध्यत | 63 | दत्वा निर्याणभेरीं | 61 |
| ग्राहादामोचयद्या | 72 | दर्पाऽहम्पूर्वझम्पा- | 1 |
| घनस्निग्धच्छविः | 9 | दस्राविवोग्रतपसां | 21 |
| घोरामेकामपगतवनीमापदम् | 25 | दास्यं कौस्तुभलक्ष्मणः | 89 |
| चक्षूरागप्रभृति | 32 | दितिजनिषु सकृत्माः | 90 |
| चञ्चूसञ्चूर्णनेन | 36 | दुरासदं तपोहीनैः | 40 |
| चतुर्दशजगन्निधि | 71 | दुष्टाः स्वकर्मणा | 5 |
| चिरतरमतिघोरे | 9 | दूर्वाभ्रूकमय | 1 |
| छत्रत्वं समुपेयुषा | 82 | दैवं रहस्यमिदमत्र | 83 |
| छन्दोमयं दिव्यसुपर्णमेकं | 38 | द्यावापृथिव्याविव | 19 |
| जगत्येकत्र मशके | 71 | द्रवन् दृष्ट्वा | 74 |
| जलेऽधिकबलः कूर्मः | 51 | द्विसस्यमिव सुक्षेत्रं | 26 |
| जह-जह वड्ढन्ति (प्रा.श्लो.) | 33 | द्वीपान्तरेषु जलधेः | 31 |
| जानताप्यार्यति येन | 54 | धन्यस्य कस्यचित् | 6 |
| ज्योत्स्नासु चन्द्रमणिभाजन | 43 | धम्मं चिणु- (प्रा. श्लो.) | 26 |

| श्लोकः | पृष्ठम् | श्लोकः | पृष्ठम् |
|---|---|---|---|
| धर्मपाशमितोऽसीति | 20 | पूर्णं निर्मलमेरुमन्दर | 50 |
| धर्मस्योपचयकृते | 11 | पूर्ववैरमनुस्मृत्य | 36 |
| धातुःसुताकविमुखाम्बु | 74 | प्रकृत्या वक्रेभ्यः | 22 |
| ध्यायन्निव किमप्यन्तः | 32 | प्रतिगगनमसूनां | 19 |
| नध्री वर्मशतस्य | 52 | प्रत्यक्षतः परिगतोऽपि | 14 |
| न वः पिता माता | 86 | प्रत्यादेशभयात् | 33 |
| न स्यां प्राणिभयङ्करः | 54 | प्रसाद्य शिरसा देवं | 38 |
| नहीदृश स्वस्त्ययनं | 30 | प्राप्तः सोमोऽयम् | 84 |
| नानाविधप्रहरणाङ्कित | 77 | प्राणानपेक्ष्य गुरुतोपण | 67 |
| नित्याभिवादनविधौ | 44 | प्लुष्टा इव रवि- | 16 |
| निरन्तरं सश्चरता | 38 | वलियान्विद्वेषी | 28 |
| निर्दोषरम्यपदबन्ध | 7 | बालक्रीडासु | 73 |
| निस्तीर्योपधिकृतमप्रश- | 87 | बार्हस्पत्यमतेन | 28 |
| नूनं शिशुरिति प्राज्ञाः | 14 | बिभ्रद् दृप्तौ | 49 |
| न्यग्रोधस्यास्य | 53 | बिभ्रद् वक्त्रेण | 53 |
| पक्षव्याविद्धभिन्नाम्बुधि | 17 | ब्रह्मक्षत्रतपोनिधिः | 69 |
| पक्षोदश्चितकाश्चनाचल | 42 | भक्तिप्रणाश | 81 |
| परिणतफलजम्बू | 8 | भीतैश्छात्रैर्वटुभिः | 41 |
| पश्यत्वद्य तवोद्यमं | 65 | भीमाभिर्मर्मभूभृत् | 31 |
| पाद्यार्घ्ये माधुपर्कं | 12 | भूत्वा बालैः | 20 |
| पारीक्षितस्य यज्ञे वः | 81 | भूत्वा सूक्ष्मः | 66 |
| पीत्वा सोममनल्पत्वात् | 83 | भूयः फूत्कृतयः | 61 |
| पुत्रेषु पितरः कामान् | 45 | भ्रातः षण्मुख | 58 |

| श्लोक: | पृष्ठम् | श्लोक: | पृष्ठम् |
|---|---|---|---|
| भ्राता पितृष्वसुः | 78 | यस्यार्थे प्रवनं पुरा | 66 |
| भ्राम्यन्मन्दरवप्र- | 75 | याच्ञादैन्याददह | 35 |
| मत्तैरावणदर्पदारण | 52 | यानास्त्रवर्महीनस्य | 63 |
| मन्दाकिन्यास्तटमनुवनं | 52 | युगान्तमनुदीरित | 64 |
| मन्दाराणां दामदिव्यं | 72 | युद्धदानदयावीरे | 77 |
| मादर्वन्द्या त्वमसि | 13 | रत्नैस्तीर्थैरमित- | 40 |
| मातुर्हिंसा निगमवचसां | 73 | रत्नैः पुष्पफलैः | 89 |
| मित्रं दुर्लभमुज्झितोपधि | 26 | रम्भारम्योरुरम्भा- | 39 |
| यः शास्ता मम कोऽपि | 70 | रहस्यं यदृचां स | 48 |
| यत्किञ्चित्खादपि परतरं | 5 | रहः सन्देशसर्वस्वं | 29 |
| यत्किञ्चित्परमं | 48 | रोषावेशातितीव्रा- | 51 |
| यत्नं महान्तममुमास्थित | 65 | लङ्काशैलस्यार्जवेनेह | 29 |
| यत्पश्चादपि तद्यथाहि | 55 | लङ्कोपान्ते निबध- | 54 |
| यथाकथञ्चिन्निर्वाह्य | 35 | लोकोपप्लव | 16 |
| यथैवकद्रूर्विनता | 86 | वर्गाणां दितिजनुषां | 39 |
| यदखिलविदुपस्थितः | 11 | वत्सोद्भासिकौस्तुभ- | 67 |
| यदपि सुरसमूहानेष | 46 | वन्यामाश्रित्य वन्यां | 56 |
| यदस्थिभिरिदं वज्रं | 75 | वाल्मीकिवत्समुख | 2 |
| यदा यदा वर्धितौ | 33 | विचित्ररुचिकाञ्चनं | 60 |
| यद्गर्भस्य ममापराध- | 76 | विचेष्टमानौ | 52 |
| यद्गायत्र्याः पुरा | 31 | विज्ञैरवेद्यमिदमज्ञ | 70 |
| यन्ता यस्य स्वयं | 48 | विधिवत्कल्पितैर्नागैः | 60 |

| श्लोकः | पृष्ठम् | श्लोकः | पृष्ठम् |
|---|---|---|---|
| विदर्नस्तात तपसां | 44 | सन्नद्धं विबुधवलं | 21 |
| विष्टभ्यावरमाश्रमोपरि | 41 | समुद्रमथने विष्णोः | 30 |
| विष्पन्दते दक्षिणमक्षि | 42 | सर्वां दृष्टामथर्वाणम | 49 |
| व्याप्तब्रह्माण्डपिण्डीभवद् | 62 | सर्वेश्वरे त्रिजगतां | 69 |
| व्युत्क्रम्य प्रतिहतदृग्विषौ | 66 | सहस्रं वव्रे वा | 22 |
| व्रतयमजपहोमध्यान | 67 | साक्रन्दं किमु | 75 |
| शक्राज्ञयाऽथ पवनेन | 63 | सुकर्मा वा विकर्मा | 36 |
| शठानां ध्वस्तशेषाणां | 36 | सुतान् वव्रे कद्रूः | 21 |
| शाखां दुरीहामित्र | 57 | सुरासुराणां गुरुणा | 48 |
| शाखां सुवेलकटके | 57 | सुरेभ्यो नेतरेषां हि | 84 |
| शातकुम्भमयकुम्भ | 88 | सौवर्णराजत | 12 |
| शारीरकलुषं वाल्ये | 82 | स्थाम व्यञ्जन- | 13 |
| शिशुरपि भवान् | 43 | स्वच्छन्दासन्नवृन्दावन | 72 |
| शिष्याभ्यां तपनत्विषां | 50 | स्नात्वा नागान् | 84 |
| शिष्याणां समितौ | 15 | स्नेहोदया वा | 43 |
| शिष्योऽस्मि शेषस्य | 15 | स्वर्गापगातनुतरङ्ग | 40 |
| शीर्षप्रेषितनिर्निमेष- | 36 | स्वभाविकाद्भुत | 69 |
| शूलस्याग्निर्व्रजति करिणः | 23 | स्वायम्भुवप्रवरदक्ष- | 10 |
| शेषाङ्कं कुलदैवतं | 6 | हन्त वञ्चित एवासौ | 10 |
| शेषेण यत्र गरुडस्य | 87 | हिरण्मयोऽप्यच्छ | 3 |
| श्लाघ्यं सदा गुरुजनस्य | 85 | हिरण्ययगर्भादि | 46 |
| षण्णाभ्येकं द्वादशार | 37 | हेषानिर्घोषिताशावलय- | 60 |
| सख्यं मया सह तवास्तु | 76 | हैमाम्बुजन्ममृदुनाल | 49 |